गोवर्धनाचलोद्धर्ता गोपालः सर्वपालकः।
अजो निरञ्जनः कामजनकः कञ्जलोचनः॥
मधुहा मथुरानाथो द्वारकानायको बली।
वृन्दावनान्तसंचारी तुलसीदामभूषणः॥
स्यमन्तकमणेर्हर्ता नरनारायणात्मकः।
कुब्जाकृष्णाम्बरधरो मायी परमपूरुषः॥
मुष्टिकासुरचाणूरमल्लयुद्धविशारदः।
संसारवैरी कंसारिर्मुरारिर्नरकान्तकः॥
अनादिब्रह्मचारी च कृष्णाव्यसनकर्षकः।
शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकः॥
विदुराक्रूरवरदो विश्वरूपप्रदर्शकः।
सत्यवाक्सत्यसंकल्पः सत्यभामारतो जयी॥
सुभद्रापूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः।
जगद्गुरुर्जगन्नाथो वेणुनादविशारदः॥
वृषभासुरविध्वंसी बाणासुरकरान्तकः।
युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः॥
पार्थसारथिरव्यक्तो गीतामृतमहोदधिः।
कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजः॥
दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशकः।
नारायणः परंब्रह्म पन्नगाशनवाहनः॥
जलक्रीडासमासक्तो गोपीवस्त्रापहारकः।
पुण्यश्लोकस्तीर्थपादो वेदवेद्यो दयानिधिः॥

**सर्वतीर्थात्मकः सर्वग्रहरूपी परात्परः।**

**एवं श्रीकृष्णदेवस्य नाम्नामष्टोत्तरं शतम्॥**

**कृष्णनामामृतं नाम परमानन्दकारकम्।**

**अत्युपद्रवदोषघ्नं परमायुष्यवर्धनम्॥**

*॥ इति श्रीपद्मपुराणे उत्तरखण्डे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥*




# सहस्रनामस्तोत्रसंग्रह

Code 1594

